प्रपंचके मिथ्यात्वमें दृष्टान्त ।

अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥
स्वप्नो जागरणेऽलीकः स्वप्नेऽपि जागरो नहि ।
द्वयमेव लये नास्ति लयोऽपि ह्युभयोर्न च ॥ ५७ ॥

नन्वयं लोक एव तत्कारणे सति कथं शोकाद्यभाव उच्यत इत्याशंक्य सदृष्टांतमाह—अनुभूत इति । स्पष्टम् ॥ ५६ ॥ दृष्टांतं विवृण्वन्नुक्तन्यायमन्यत्राप्यतिदिशति—स्वप्न इति । अलीको मिथ्या द्वयं स्वप्नजागरणे । लये सुषुप्तौ शेषं स्पष्टम् ५७

जिस प्रकार स्वप्नावस्थामें स्वप्नमें देखा हुआ पदार्थ सम्पूर्ण सत्स्वरूप मालूम पडै है, स्वप्नसे दूसरे क्षणमें जागते ही सब असत् स्वरूप हो जाय है इसी प्रकार इस संसारका व्यवहार सत्य मालूम होय है और असत् स्वरूप होय है । जाग्रत् अवस्थामें स्वप्न मिथ्या मालूम होय है, स्वप्न अवस्थामें जाग्रत् मिथ्या मालूम होय है और सुषुप्ति अवस्थामें स्वप्न जाग्रत् दोनों मिथ्या होय हैं । इसी प्रकार स्वप्न और जाग्रत् अवस्थामें सुषुप्ति मिथ्या प्रतीत होय है ॥ ५६ ॥ ५७ ॥

अवस्थात्रयका मिथ्यात्व ।

त्रयमेवं भवेन्मिथ्या गुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥५८॥

उक्तमुपसंहरन्फलितमाह—त्रयमिति । त्रयं जाग्रदाद्यवस्था-त्रयमेवमुक्तपरस्परव्यभिचारेण मिथ्या । मिथ्यात्वे हेतुः-गुणेति। गुणत्रयविनिर्मितं मायाकल्पितमित्यर्थः । तर्हि किं सत्यमत आह—अस्येति । अस्य अवस्थात्रयस्य । शेषं स्पष्टम् ॥५८॥

सतोगुण, रजोगुण और तमोगुणसे बने हुए जाग्रत् स्वप्न सुषु[illegible] तीनों ऊपर कहे हुए प्रकारसे मिथ्या होय हैं । इन तीनों अवस्थाओंसे [illegible] साक्षी गुणातीत अर्थात् गुणरहित चिन्मय अर्थात् चैतन्य स्वरूप सत् है ॥ ५८ ॥

जीव-ब्रह्मकी एकतामें दृष्टान्त ।

**यद्वन्मृदि घटभ्रांतिं शुक्तौ वा रजतस्थितिम् ।**
**तद्वद् ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥ ५९ ॥**

नन्ववस्थात्रयं मिथ्या भवतु जीवस्तु सत्यः स्यादित्याशंक्य सदृष्टांतमुत्तरमाह—यद्वदिति । ब्रह्मणि वीक्ष्यमाणे आत्मत्वेन साक्षात्कृते सति जीवत्वं न पश्यतीत्यन्वयः। अन्यत्स्पष्टमेव॥ ५९॥

यदि आत्मामें गुणत्रय मिथ्या है तौ जीव ही सत्य हो ? तहां कहते हैं जिस प्रकार मृत्तिकामें घटकी भ्रान्ति है परन्तु घट नष्ट होनेपर मृत्तिका ही दृष्टिगोचर होय है और जैसे शुक्तिमें चांदीकी भ्रान्ति होय है और जब समीप जाके देखै है तो सीपी होय है इसी प्रकार जबतक आत्माका ज्ञान नहीं होय तबतक जीव है ऐसी प्रतीति हो है, परन्तु ब्रह्मका साक्षात्कार होनेसे जीवको नहीं देखै है ॥ ५९ ॥

**यथा मृदि घटो नाम कनके कुण्डलाभिधा ।**
**शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥ ६० ॥**

अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टांतैराह—यथेति । रजतस्य ख्यातिराख्या, नामेति यावत् । परे परब्रह्मणि जीवशब्दस्तथा । शेषं स्पष्टम् ॥ ६० ॥

अज्ञान अवस्थामें जो जीव ब्रह्मका भेद भासै है सो केवल नाममात्र होय है, वस्तुतः मृत्तिका होय परन्तु घट ऐसा नाममात्र होय है और सुवर्ण होय है परन्तु कटक कुण्डल ऐसा नाममात्र होय है सीपी होय है परन्तु मायावश पुरुष रजत कहने लगे हैं, इसी प्रकार

वस्तुतः ब्रह्म होय है तब भी ब्रह्ममें जीवसंज्ञा होय है सो नाममात्र है वस्तुतः मिथ्या है ॥ ६० ॥

### ब्रह्ममय संसार ।

**यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।**
**पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ६१ ॥**

न केवलं जीव एव नाममात्रः किंतु सर्वविश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टांतैराह–यथैवेति । स्पष्टम् ॥ ६१ ॥

केवल जीव ही नाममात्र नहीं है किन्तु सम्पूर्ण विश्व ही नाममात्र है । जैसे आकाशमें वस्तुतः कुछ नहीं है परन्तु नीलापन मालूम होय है और जैसे मारवाडकी भूमिमें वस्तुतः जल नहीं है परन्तु भ्रान्तीसे जल मालूम होय है और जैसे अन्धकार दीपसे रात्रिमें ठूंठ पुरुष मालूम होय है परन्तु वस्तुतः पुरुष है नहीं इसी प्रकार यह संसार परमात्मा ब्रह्मके विषे भिन्न और सत्यसा प्रतीत होय है परन्तु वस्तुतः कुछ भी नहीं है ॥ ६१ ॥

### संसारकी स्थिति ।

**यथैव शून्ये वैतालो गंधर्वाणां पुरं यथा ।**
**यथाकाशे द्विचंद्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥६२॥**

नाममात्रप्रपंचस्य मिथ्यात्ववासनादार्ढ्यायेममेवार्थं बहुभिर्लोकप्रसिद्धदृष्टांतैः प्रपंचयति–यथैव शून्य इत्यादित्रिभिः । शून्ये निर्जने देशे वैतालः अकस्मादाभासमानो भूतविशेषः । गन्धर्वपुरस्यापि शून्याधिष्ठानत्वं ज्ञेयम् । गन्धर्वनगरं नाम राजनगराकारो नीलपीतादिमेघरचनाविशेषः । आकाशे द्विचन्द्रत्वम् । स्पष्टमन्यत् ॥ ६२ ॥

जिस प्रकार निर्जन स्थानमें अकस्मात् प्रत्यक्ष होकर वैताल ( भूत-विशेष ) मालूम होय है परन्तु वस्तुतः मिथ्या होय है और जैसे निर्जन

स्थानमें नीले पीले मेघोंसे बना हुआ गन्धर्वोंका नगर मालूम लगै है परन्तु वह भी वस्तुतः मिथ्या होय है और जैसे आका किसी समय किसी कारण भ्रान्तिसे दो चंद्रमा मालूम होने लगै इसी प्रकार सत्यस्वरूप आत्मामें जगत् सत्यसा प्रतीत होय है वह सत्य नहीं है ॥ ६२ ॥

यथा तरंगकल्लोलैर्जलमेव स्फुरत्यलम् ।
पात्ररूपेण ताम्रं हि ब्रह्मांडौघस्तथात्मता ॥ ६३ ॥

यथा तरंगेति सुगमम् ॥ ६३ ॥

जिसप्रकार जल ही तरङ्गरूप देखनेमें आवै है और ताम्र पात्राकार देखनेमें आवै है इसीप्रकार आत्मा ही ब्रह्माण्डाकार दृष्टिगोचर होय है ॥ ६३ ॥

घटनाम्ना यथा पृथ्वी पटनाम्ना हि तंतवः ।
जगन्नाम्ना चिदाभाति ज्ञेयं तत्तदभावतः ॥ ६४ ॥

घटेति । तत्र पादत्रयं स्पष्टम् । ननु किमनेन मिथ्या वासनादार्ढ्येनेत्यत आह—ज्ञेयमिति । तदभावतो नामाभा स्तद्ब्रह्म ज्ञेयम् । " वाचारंभणं विकारो नामधेयं मृत्ति त्येव सत्यम् " इत्यादिश्रुतेः ॥ ६४ ॥

जैसे संसारमें मृत्तिका घटनाम करके प्रसिद्ध होय है और पटनाम करके प्रसिद्ध होय है इसीप्रकार जीव नाम करके चिद्रूप आत्मा प्रसिद्ध होय है । सो मिथ्या है क्योंकि संसारके हारके वास्ते नाम संकेतमात्र होय हैं ॥ ६४ ॥

ब्रह्ममय व्यवहार ।

सर्वोऽपि व्यवहारस्तु ब्रह्मणा क्रियते जनैः ।
अज्ञानान्न विजानंति मृदेव हि घटादिकम् ॥ ६५ ॥

ननु "यत्र हि द्वैतमिव भवति" इत्यादिश्रुत्यर्थदर्शने-ऽवस्थात्रये विदेहमोक्षावुक्तौ नतु जीवन्मोक्ष इत्याशंक्याह-सर्व इति । सर्वोऽपि लौकिको वैदिकश्चेति । शेषं स्पष्टम् । अयं भावः-अज्ञाननिवृत्तिरेव जीवन्मुक्तिर्नतु द्वैतादर्शनं-मेति ॥ ६५ ॥

लोककी जीवन्मोक्ष अवस्था दिखावें हैं क्योंकि ( "यत्र हि द्वैत-मेव भवति" ) जिसमें ज्ञान होनेपर द्वैतकेसा व्यवहार किया जाय है वह जीवन्मोक्ष विदेह 'मोक्ष' से विलक्षण तीसरी अवस्था कहलावै है तिस जीवन्मोक्ष अवस्थामें सब लोक परब्रह्मके नियमानुसार सब प्रकार लौकिक और वैदिक कार्य्य करै है ऐसा है संसारी पुरुष तबभी अज्ञा-नवशसे कोईभी ब्रह्मको जाननेको समर्थ नहीं होय है । जैसे यद्यपि घट मृत्तिका ही है तथापि मृत्तिका कहनेको समर्थ नहीं होय है । आशय यह है कि लोक यह नहीं जाने है कि लोकव्यवहारके ही कारण द्वैत व्यव-हार किया जाय है,वस्तुतः अज्ञानकी निवृत्तिका नाम ज्ञान है और लोक-व्यवहारमें भी अद्वैत व्यवहार करनेका नाम ज्ञान नहीं है ॥ ६५ ॥

### विश्व और ब्रह्ममें कार्यकारणता ।

**कार्यकारणता नित्यमास्ते घटमृदोर्यथा ।**
**तथैव श्रुतियुक्तिभ्यां प्रपंचब्रह्मणोरिह ॥ ६६ ॥**

तत्र हेतुं सदृष्टांतमाह-कार्येति । यथा "सौम्यैकेन मृत्पि-ण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इत्यादिश्रुतिः । युक्तिस्तु कार्यकारणयोरन्यत्वे एककारणज्ञानात्सर्वकार्यज्ञानं न स्यादि-त्यादि । सुगममन्यत् ॥ ६६ ॥

जैसे सदा घट और मृत्तिकाका कार्य्यकारण भाव देखनेमें आवै है तिसी प्रकार श्रुतियोंसे और युक्तियोंसे प्रपञ्च अर्थात् जगत् और ब्रह्मका कार्य्यकारण भाव जाना जाय है ॥ ६६ ॥

गृह्यमाणे घटे यद्वन्मृत्तिकायाति वै बलात् ।
वीक्ष्यमाणे प्रपंचेऽपि ब्रह्मैवाभाति भासुरम् ॥ ६७ ॥

कार्यकारणयोरनन्यत्वमेव दृष्टांतेन स्पष्टयति-गृह्यमाण
भासुरं प्रमाणनिरपेक्षतयैव भासनशीलम् । स्पष्टमन्यत् ॥६

जैसे घटके विषयमें विचार करते करते अन्तमें मृत्तिका ही नि
होय है, इसी प्रकार इस संसारके विषयमें विचार करते करते
प्रमाणोंकेही प्रकाशवान् ब्रह्म प्रतीत होय है ॥ ६७ ॥

## आभासमें द्वैविध्य ।

सदैवात्मा विशुद्धोऽस्ति ह्यशुद्धो भाति वै सदा ।
यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् ॥६

ननु ब्रह्मणि भासमाने प्रपंचो न भासेतेत्याशंक्यावस्था
देनोभयमपि भासत इति सदृष्टांतमाह—सदैवेति । तत्र ज्ञानि
सदैवात्मा विशुद्धः । अज्ञानतत्कार्यप्रपंचमलरहितत्वान्नि
चोऽस्तीत्यर्थः । अज्ञानिनस्तु सदैवाशुद्धोऽस्तीति भ्रमाद्विभा
वै हीति तत्प्रसिद्धौ । उभयत्रापि दृष्टांतः--यथेति । यथा र
ज्ञानिनः सर्पाभावतया निर्विषत्वेनाभयंकरी । अज्ञानिन
सर्परूपतया विपरीतत्वेन भयंकरीति द्विविधा भाति ।
भावः—ब्रह्म यद्यपि स्वयंप्रकाशत्वेन सदा भात्येव तथ
वृत्त्या रूढत्वेन पुरुषार्थोपयोगीति ज्ञानिनः प्रतिभाति ना
निनः, सूर्यदीपादिरिव चक्षुष्मदंधयोरिति दिक् ॥ ६८ ॥

जैसे एक ही रज्जु अज्ञानी पुरुषोंको भ्रमसे सर्प मालूम हो
और ज्ञानवान् पुरुषोंको रज्जु ही मालूम हो जाय है इसीप्रकार

परमात्मा सर्वदा ज्ञानियोंको शुद्धस्वरूप और प्रकाशवान् मालूम होय है और अज्ञानियोंको शुद्धस्वरूप और प्रकाशवान् नहीं मालूम होय है, वस्तुतः परमात्मा शुद्धस्वरूप और प्रकाशवान् है ॥ ६८ ॥

आत्मानात्मविभागका मिथ्यात्व ।

यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ।
आत्मानात्मविभागोऽयं मुधैव क्रियतेऽबुधैः ॥ ६९ ॥

नन्वात्मा यदि सदैव निष्प्रपंचत्वेन भाति तर्हि किमर्थं देहात्मभेदो वर्णित इत्याशंक्याविवेकिनो देहव्यतिरिक्तात्मबोधार्थं विवेकिनस्तु व्यर्थ एवेति सदृष्टांतमाह--यथेति । तत्राबुधैरित्यकारप्रश्लेषे मुधैव क्रियते अपितु नेति काकुव्याख्यानम् । अन्यत्सर्वं सुगमम् ॥ ६९ ॥

यदि आत्मा सदा निष्प्रपञ्च भासमान होय है तव आत्मा और देहका भेद क्योंकर दिखाया है ? ऐसी शंका होनेपर कहे हैं-जैसे कुम्भ मृत्तिकामय होय है तिसीप्रकार देह चैतन्यस्वरूप आत्ममय होय है इसीकारण ज्ञानी पुरुषको तौ आत्मा और देहका भेद मिथ्या है ॥ ६९ ॥

देहतादात्म्यका निरूपण ।

सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७० ॥

इदानीमविवेकिनः कल्पितदेहतादात्म्यं सदृष्टांतमाह--सर्पत्वेनेति ॥ ७० ॥

जिस प्रकार अज्ञानी पुरुष रज्जुको सर्प मान लेय है और सीपीको चांदी मान लेय है इसी प्रकार आत्माको देहरूप अज्ञानी निर्णय करै है ॥ ७० ॥

घटत्वेन यथा पृथ्वी पटत्वेनैव तंतवः ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७१ ॥

घटत्वेनेति स्पष्टम् ॥ ७१ ॥

जैसे अज्ञानी पुरुप मृत्तिकाको घट मानै है और तन्तुओंको मानै है तिसी प्रकार आत्माको देहरूप निर्णय करै है ॥ ७१ ॥

कनकं कुंडलत्वेन तरंगत्वेन वै जलम् ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७२ ॥

कनकमिति ॥ ७२ ॥

जिस प्रकार अज्ञानी पुरुप सुवर्णको कुंडल मानै है जलको तरंगरूप मानै है तिसी प्रकार आत्माको देहरूप नि करै है ॥ ७२ ॥

पुरुपत्वे यथा स्थाणुर्जलत्वेन मरीचिका ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७३

पुरुपत्व इति स्पष्टम् ॥ ७३ ॥

जिस प्रकार अज्ञानी पुरुप शाखाहीन वृक्ष अर्थात् ठूंठको पुरुपरूप मानै है और मरुमरीचिकाको जलरूप मानै है तिसी प्र आत्माको देहरूप निर्णय करै है ॥ ७३ ॥

गृहत्वेनैव काष्ठानि खड्गत्वेनैव लोहता ।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७४

गृहत्वेनेति । सर्पत्वेनेत्यादि पंचानामप्येतेषां श्लोका मर्थः स्फुटतर एवास्त्यतो न व्याख्यानं कृतम् ॥ ७४ ॥

जिसतरह बहुत सारे काष्ठोंके समूहको अज्ञानी घर मान लेय हैं और लोहेको तलवार मान लेय है तिसीप्रकार आत्माको देहरूप निर्णय करै है ॥ ७४ ॥

आत्मामें देहत्वका निर्णय ।

यथा वृक्षविपर्यासो जलाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७५ ॥

नन्वन्यथा निर्णये किं कारणमिति चेत्तदज्ञानमेवेति सदृष्टांतमाह—यथा वृक्षेत्यादि द्वादशभिः ॥ ७५ ॥

जिस जलमें वृक्षकी छाया पडे है और अज्ञानी पुरुष उस प्रतिबिम्बको ही साक्षात् वृक्ष मान लेय तिसी प्रकार अज्ञान वशसे इस आत्मामें देहका ज्ञान है ॥ ७५ ॥

पोतेन गच्छतः पुंसः सर्वं भातीव चंचलम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७६ ॥

पोतेनेति । पोतेन नौकया । स्पष्टमन्यत् ॥ ७६ ॥

जिस प्रकार जहाज या नौकामें चढकर जानेवाले पुरुषको सब चलता हुआ मालूम होय है तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञान है ॥ ७६ ॥

पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७७ ॥

पीतत्वमिति ॥ ७७ ॥

जिस प्रकार किसी पुरुषको पित्तदोषसे कमलवायु हो जाय है और श्वेत वस्तु भी पीली मालूम होने लगे है तिसी प्रकार अज्ञान वशसे इस आत्मामें देहका ज्ञान है ॥ ७७ ॥

चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७८ ॥

चक्षुर्भ्यामिति ॥ ७८ ॥

जिस प्रकार किसी पुरुषके नेत्रोंमें भ्रम होय है अर्थात् घूमने बेमारी होय है उस पुरुषको सम्पूर्ण पदार्थ घूमते हुए मालूम होय तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञान है ॥ ७८ ॥

अलातं भ्रमणेनैव वर्तुलं भाति सूर्यवत् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७९ ॥

अलातमिति ॥ ७९ ॥

जिस प्रकार जला हुआ मुराड घुमानेसे वह सूर्यकी नाई वर्तुलाकार मालूम होय है तिसी प्रकार अज्ञानवशसे इस आत्मामें देह ज्ञान है ॥ ७९ ॥

महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८० ॥

महत्त्व इति । हीति सर्वलोकप्रसिद्धौ ॥ ८० ॥

जिस प्रकार बहुत बडी वस्तु भी अत्यन्त दूरसे अतिसूक्ष्मकी दखि है तिसी प्रकार अज्ञानवशसे इस आत्मामें देह ज्ञान है ॥ ८० ॥

सूक्ष्मत्वे सर्वभावानां स्थूलत्वं चोपनेत्रतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८१ ॥

सूक्ष्मत्वे इति ॥ ८१ ॥

जिस प्रकार अतिसूक्ष्म वस्तुओंका भी उपनेत्र अर्थात दूरबीन आदिसे अतिस्थूल वस्तुकी तरह बोध होय है तिसी प्रकार अज्ञान वशसे इस आत्मामें देहका ज्ञान है ॥ ८१ ॥

काचभूमौ जलत्वं वा जलभूमौ हि काचता ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८२ ॥

काचभूमाविति ॥ ८२ ॥

जिस प्रकार काँचकी भूमिमें जलकी बुद्धि होय है और जलकी भूमिमें काँचकी बुद्धि होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहज्ञान है ॥ ८२ ॥

यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८३ ॥

यद्वदिति ॥ ८३ ॥

जिस प्रकार भ्रमसे अग्निमें मणिकी बुद्धि होय है और मणिमें अग्निकी बुद्धि होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञान है ॥ ८३ ॥

अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८४ ॥

अभ्रेष्विति ॥ ८४ ॥

जिस प्रकार आकाशमें मेघोंके दौडनेसे चन्द्रमा दौडतासा मालूम होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञान है ॥ ८४ ॥

यथैव दिग्विपर्यासो मोहाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८५ ॥

यथेति । यथा वृक्षेत्यादिश्लोकानां स्फुटार्थत्वात्पिष्टपेषणतुल्यत्वेन न व्याख्यानं कृतम् ॥ ८५ ॥

जिस प्रकार मोह वशसे किसीको दिशाओंमें भ्रम होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञान है ॥ ८५ ॥

यथा शशी जले भाति चंचलत्वेन कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८६ ॥

यथा शशीति । शशीत्युपलक्षणं सूर्यादीनामपि । शेषं स्पष्टम् ॥ ८६ ॥

जिस प्रकार किसीको किसी समय जलके हिलनेसे चन्द्रका प्रतिबिम्ब हिलनेसे चन्द्रमा हिलै है ऐसा बोध होय इसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञान है ॥ ८६ ॥

ज्ञानसे देहाध्यासकी निवृत्ति ।

एवमात्मन्यविद्यातो देहाध्यासो हि जायते ।
सैवमात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥

एवं द्वादशभिः श्लोकैरुक्तमर्थमुपसंहरति-एवमिति । एवमुक्तेन प्रकारेणात्मन्यविद्यातः आत्माऽज्ञानात् देहाध्यासो मनुष्योऽहमित्यादिबुद्धिर्जायते भवति । हीति प्रसिद्धौ । नन्वेतस्य निवृत्तिः कुतो भवेदिति चेदात्मज्ञानादेवेत्याहोत्तरार्धेन—स इति स एव देहाध्यास एवात्मपरिज्ञानात् ब्रह्मात्मैक्यसाक्षात्कारात्परात्मनि अज्ञानतत्कार्यरहिते प्रत्यगभिन्ने ब्रह्मणि लीयते ब्रह्मस्वरूपेणावतिष्ठते । नह्यधिष्ठानं विनाऽऽरोपितस्य स्वरूपमस्ति । चकारादध्यासकारणमज्ञानमपि लीयते इति । अन्यथाऽध्यासलयाभावादित्यर्थः । नहि कारणे सति कार्यस्य लयः संभवति । तस्मादात्मज्ञानादेव सकारणकार्याध्यासनिवृत्तिरित्यलं पल्लवितेन ॥ ८७ ॥

इस प्रकार आत्मामें देहाध्यास अर्थात् देह ज्ञान होय है और जब आत्माका तत्त्वपरिज्ञान होय है तब वह देहाध्यास परमात्मामें लीन होजाय है अर्थात् देहका ज्ञान आत्मज्ञानमें लय होजाय है ॥ ८७ ॥

सर्वमात्मतया ज्ञातं जगत्स्थावरजंगमम् ।
अभावात्सर्वभावानां देहस्य चात्मता कुतः ॥ ८८ ॥

एतदेव विवृणोति-सर्वमिति । आत्मता देहस्य नेत्यर्थः । स्पष्टमन्यत् ॥ ८८ ॥

जब स्थावर जङ्गम सम्पूर्ण जगत् आत्मस्वरूप मालूम होने लगैं है तब सब पदार्थोंके अनित्य होनेसे देहकी आत्मता किस प्रकार होसकै है अर्थात् कभी भी नहीं होय है ॥ ८८ ॥

आत्मविचारकी कर्तव्यता ।

आत्मानं सततं जानन्कालं नय महाद्युते ।
प्रारब्धमखिलं भुंजन्नोद्वेगं कर्तुमर्हसि ॥ ८९ ॥

ननु ज्ञानिनो निष्प्रपंचात्मतया मम किं स्यात् ब्रह्मण्यभोजनेनान्यस्तृप्यतीति चेदत आह—आत्मानमिति । भो महाद्युते ! [ कामादिपराभवेन स्वहितसाधनोन्मुखश्चेत्तर्हि ] त्वम् आत्मानं प्रत्यगभिन्नं सततम् आसुप्तिमृतिपर्यंतं जानन् वेदांतवाक्यैर्विचारयन् कालं नय अतिक्रामस्व । विचारसाध्यज्ञानानंतरं चाखिलं प्रारब्धं चरमदेहारंभकं कर्म भुंजन् सुखदुःखाभासानुभवेन क्षपयन् समुद्वेगं कर्तुं नार्हसीत्युपदेशः ॥ ८९ ॥

हे महामते ! सदा आत्माको जानता हुआ समयको व्यतीत कर और समस्त प्रारम्भ किये हुए कर्मके फलको भोगता हुआ उद्वेग मत कर ॥ ८९ ॥

प्रारब्धकर्मका निराकरण ।

उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुंचति ।
इति यच्छ्रुते शास्त्रे तन्निराक्रियतेऽधुना ॥ ९० ॥

वस्तुतस्तु प्रारब्धमेव नास्ति कुतो भोगः, भोगाभावे कु उद्वेगकारणम्, तदभावे च कुतस्तरां तन्निषेधोपदेश इति वेदां तसिद्धांतरहस्यं वक्तुं प्रतिजानत आचार्याः-उत्पन्न इति अत्रेयं प्रक्रिया, जगत्प्रतीतिस्त्रिधा—शास्त्रीया, लौकिकी, आनु भाविकी चेति । तत्राद्या पारमार्थिकी, द्वितीयाऽपारमार्थिकी तृतीया तु प्रातिभासिकी । तासां निवृत्तिस्तु क्रमात् वेदांतश्रवणा दित्रेयसाक्षात्कारप्रारब्धक्षयैर्भवति नान्यथेति । तत्रेयं प्रतिज्ञा ऽन्यप्रतीत्यभिप्रायेणेति ज्ञातव्यम् । श्लोकार्थस्तु स्फुट एव ॥९०॥

आत्मज्ञान होने पर भी पुरुष कर्म्मफलका त्याग नहीं करै है ऐ शास्त्रोंमें सुननेमें आवे है, उसका अब हम निराकरण अर्थात् खण्ड करे हैं ॥ ९० ॥

तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ।
देहादीनामसत्त्वात्तु यथा स्वप्नो विबोधतः ॥ ९१ ॥

तदेवाह—तत्त्वेति । ज्ञानेन सर्वव्यवहारकारणाज्ञाननिवृत्तं प्रारब्धाभाव इति श्लोकार्थः । पदार्थस्तु स्फुट एव ॥ ९१ ॥

तत्त्वज्ञानके अनन्तर प्रारब्ध अर्थात् कर्म्मफल नहीं रहता है, क्योंकि जैसे स्वप्नमें नानाप्रकार विचित्र विचित्र प्रकार देखनेमें आवै हैं और जब पुरुष जागै है तौ सब झूठे होजाय हैं इसी प्रकार आत्मज्ञान होनेसे देहादि असत् स्वरूप मालूम होने लगै हैं और जब देहादिक असत् हुए तब प्रारब्ध कर्म्म और उनके फल भी असत्स्वरूप हो जाय हैं ॥ ९१ ॥

---

१ व्यावहारिकी । २ श्रवण, मनन और निदिध्यासन ।

कर्म जन्मांतरीयं यत्प्रारब्धमिति कीर्तितम् ।
तत्तु जन्मांतराभावात्पुंसो नैवास्ति कर्हिचित् ॥ ९२ ॥

इदानीं प्रारब्धशब्दं व्युत्पादयन्नुक्तमुपसंहरति-कर्मेति । तत्र कर्म त्रिविधम्-संचितक्रियमाणप्रारब्धभेदात् । तन्मध्ये भाविदेहारंभकं संचितम्, तथा वर्तमानदेहनिर्वर्त्त्यं क्रियमाणम् । प्रारब्धं तु वर्तमानदेहारंभकम् । तत्र यद्यपि संचितं जन्मांतरीयमेव तथापि भाविदेहस्य तत्प्रारब्धमेव भवति । तेनेदं सिद्ध-मात्मनः स्वतः कर्तृत्वाभावात्कालत्रयेऽपि जन्म नास्तीति सर्वमवदातम् ॥ ९२ ॥

पूर्व जन्मके कर्म्म प्रारब्ध कहावै हैं और जब पुरुषको तत्त्वज्ञान होय है फिर जन्म नहीं होय है । यदि जन्म नहीं हुआ तौ कर्मका भोक्ता कौन होय? इस कारण तत्त्वज्ञान होनेके अनन्तर पुरुष कर्मफलका भोक्ता नहीं होय है, जन्म नहीं होनेमें यह श्रुति प्रमाण है-"न स पुनरावर्त्तते" ॥ ९२ ॥

स्वप्नदेहो यथाध्यस्तस्तथैवायं हि देहकः ।
अध्यस्तस्य कुतो जन्म जन्माभावे हि तत्कुतः॥९३॥

पूर्वोक्तं दृष्टांतं विवृण्वन्सकारणजन्माभावे युक्तिमाह-स्वप्नेति। जन्माभावे तत्प्रारब्धं कुतः । स्पष्टमन्यत् ॥ ९३ ॥

स्वप्नके देहकी तरह यह देह अध्यस्त ( विनष्ट ) है फिर जन्म किस प्रकार होसकै है इससे किस प्रकार प्रारब्ध अर्थात् पूर्व जन्मके कर्मफलको भोग सकै है । क्योंकि जब जन्म होय तो कर्म भोगै जन्म ही नहीं तौ कर्म कहां ? ॥ ९३ ॥

### ज्ञानसे प्रपंचकी निवृत्ति ।

**उपादानं प्रपंचस्य मृद्भांडस्येव कथ्यते ।**
**अज्ञानं चैव वेदांतैस्तस्मिन्नष्टे क्व विश्वता ॥ ९४ ॥**

ननु देहादिप्रपंचस्य "यतोवा०" इत्यादिश्रुतेः सत्यब्रह्मजन्यत्वात्कथं प्रातिभासिकत्वमिति चेदुच्यते—उपादानमिति। अत्र कारणं द्विविधम्—निमित्तोपादानभेदात् । तत्र निमित्तं नामोत्पत्तिमात्रकारणम् । उपादानं तूत्पत्तिस्थितिलयकारणम् । तत्र वेदांतैः—'मायां तु प्रकृतिं विद्यात्' इत्यादिभिः प्रपंचस्योपादानमज्ञानं पठ्यते, चकाराद्ब्रह्मापि । अत्रायं भावः—न केवलं ब्रह्मैव जगत्कारणम्, निर्विकारत्वात् । नापि केवलमज्ञानम्, जडत्वात् । तस्मादुभयं मिलित्वैव जगत्कारणं भवतीति । " सत्यानृते मिथुनीकरोति " इत्यादिश्रुतेः । तत्र दृष्टांतः-भांडस्य घटकरकादेर्मृदिव मृत्पिंड इव । तत्र जलस्थाने ब्रह्म, पिंडीकरणसामर्थ्यसाम्यात् । अज्ञानं तु मृत्तिकास्थाने, आवरकत्वसाम्यात् । तत्र ब्रह्मणोऽविनाशित्वाद्ब्रह्मज्ञानेन तस्मिन्नज्ञान एव नष्टे सति विश्वता जीवजगदीश्वरात्मकजगद्भावः क्व, न क्वाप्यस्तीत्यर्थः ॥ ९४ ॥

जैसे घटके मृत्तिका और जल दो उपादान कारण हैं इसी प्रकार प्रपञ्चके भी ब्रह्म और अज्ञान दो उपादान कारण हैं ऐसा वेदान्त शास्त्रोंके प्रमाणसे जाना जाय है और जब उपादान स्वरूप अज्ञानहीका नाश होगया तौ फिर संसार कहां और जब संसार नहीं तौ कर्म्मभोग भी नहीं ॥ ९४ ॥

**यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।**
**तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥**

मिथुनीभावस्यैव जगत्कारणत्वं सदृष्टांतं प्रपंचयति—यथा-रज्जुमिति ॥ ९५ ॥

जैसे भ्रम वशसे रज्जुमें सर्पका ज्ञान होजाय और सर्पमें रज्जुज्ञान होनेसे मूढ पुरुष सर्पको पकड लेय हैं तिसी प्रकार सत्स्वरूप ब्रह्मको नहीं जानके जगत्को सत्स्वरूप माने है और फँस रहे है ॥ ९५ ॥

रज्जुरूपे परिज्ञाते सर्पखंडं न तिष्ठति ।
अधिष्ठाने तथा ज्ञाते प्रपंचः शून्यतां गतः ॥ ९६ ॥
देहस्यापि प्रपंचत्वात्प्रारब्धावस्थितिः कुतः ।

इदानीं यदुक्तं 'तस्मिन्नष्टे क्व विश्वता' इति तत् प्रपंचयन् पूर्वोक्तं प्रारब्धाभावं सदृष्टांतमुपसंहरति सार्द्धेन—रज्जुरूप इति । स्पष्टम् ॥ ९६ ॥

जैसे रज्जुमें रज्जुका ज्ञान होनेसे सर्पज्ञान नहीं रहै है तिसी प्रकार प्रपञ्चके अधिष्ठानभूत परमात्माके ज्ञान होने पर प्रपञ्च मिथ्या मालूम होय है ॥ ९६ ॥

अज्ञानियोंके लिये प्रारब्ध ।

अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥९७॥

किंच देहस्येति जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावे सति "अत्र ब्रह्म समश्नुते" इत्यादिश्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते अर्द्धेन—अज्ञानीति । श्रुतिः अज्ञानिजनबोधार्थं प्रारब्धं वक्तीत्यन्वयः । ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टे सति ज्ञानिनः कथं व्यवहार इत्यज्ञानिभिराक्षिप्ते प्रारब्धादिति तद्बोधार्थमिति । शेषं स्पष्टम् ॥ ९७ ॥

देह भी प्रपञ्चस्वरूप है और प्रपञ्चके अध्यस्त होनेसे पूर्व जन्मके कर्म कहां ? यदि कहो साक्षात् श्रुति कर्मभोगको कहै है तहां ऐसा जानना कि जिनको तत्त्वज्ञान नहीं हुआ है अज्ञानी हैं उनके बोधन करानेके वास्ते श्रुतिने कहा है ॥ ९७ ॥

### ज्ञानियोंको प्रारब्धका अभाव ।

**क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।**
**बहुत्वं तन्निषेधार्थं श्रुत्या गीतं च यत्स्फुटम् ॥९८॥**

किं तर्हि ज्ञानिबोधार्थं वक्ति श्रुतिरिति चेदुच्यते—क्षीयंते इति । " भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः । क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति श्रुत्या । कर्माणीति बहुत्वं यत् स्फुटं गीतं तत्तन्निषेधार्थं प्रारब्धाभावप्रतिपादनार्थम् अन्यथा संचितक्रियमाणापेक्षया कर्मणीति द्वित्वं गेयम् । तथा न गीतमतो ब्रह्मात्मसाक्षात्कारात् चिज्जडग्रंथिभेदेन संचितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयांते परमपुरुषार्थं ज्ञानिबोधार्थं श्रुतिर्वक्तीति भावः ॥ ९८ ॥

जो कर्म श्रुतिने प्रतिपादन किया है वह सम्पूर्ण परात्पर परमात्माके दर्शन करनेसे अर्थात् तत्त्वज्ञान होनेसे नष्ट होजाता है । सञ्चित, क्रियमाण, प्रारब्ध, तीन प्रकारका कर्म श्रुतियोंमें कहा गया है सो कर्मका अभाव प्रतिपादन करनेके अर्थ बहुत्व दरसाया ॥ ९८ ॥

### प्रारब्ध माननेमें दोष ।

**उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः ।**
**वेदांतमतहानं च यतो ज्ञानमिति श्रुतिः ॥ ९९ ॥**

उक्तवैपरीत्ये बाधकमाह—उच्यत इति । एतत्प्रारब्धमज्ञैः श्रुतितात्पर्यानभिज्ञैर्बलादविवेकसामर्थ्याच्चोच्यते यथार्थतया

प्रतिपाद्यते । चकारादद्वयात्मानं न पश्यंति । तदाऽनर्थद्वयागमो दोषद्वयप्राप्तिः । तत्र प्रारब्धरूपस्य द्वैतस्यांगीकारे अनिर्मोक्ष-प्रसंग एको दोषः, मोक्षाभावे ज्ञानसंप्रदायोच्छेदरूपो द्वितीयो दोष इति । न केवलं दोषद्वयस्यैव प्राप्तिरपि तु वेदांतमतहानं च । वेदांतमतस्याद्वैतस्य हानं त्यागो भविष्यति, प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः । तर्हि किं प्रतिपत्तव्यमित्यत आह-यत इति । यतो यस्याः सकाशात् ज्ञानं भवति तादृशी सा श्रुतिः । ग्राह्येति शेषः । सा श्रुतिस्तु—"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥" इति । एतदभिप्रायः क इति चेल्लिख्यते—धीरो विवेकी ब्राह्मणो ब्रह्म भवितुमिच्छुस्तमेव वेदांतप्रसिद्धमात्मानं विज्ञायाऽऽदावुपदेशतः शास्त्रतश्च ज्ञात्वाऽनंतरं प्रज्ञां शास्त्रा-चार्योपदिष्टविषयामपरोक्षानुभावपर्यंतां जिज्ञासापरिसमाप्तिकरीं कुर्वीत । बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्यसंद-र्भान्नानुध्यायान्न चिंतयेत् । तर्हि तान् ब्रूयात्किं तेनेत्याह-वाच इति । तद्द्वैतशास्त्रपठनं वाचो विग्लापनं विशेषेण श्रमकरम् । हीति सर्वानुभवसिद्धमित्यलं पल्लवितेन ॥ ९९ ॥

यदि अनभिज्ञ अर्थात् अज्ञानी पुरुष बलात्कार करके कर्म्म अर्थात प्रारब्धको स्वीकार करैं तब उनको दो दोष आवेंगे-एक तो मोक्षका अभाव, दूसरे मोक्ष न होनेसे ज्ञानका अभाव और इस प्रकार वेदान्त मत ( अद्वैतवाद ) की भी हानि है, इस हेतु प्रारब्धरूप द्वैत स्वीकार करना पडेगा । अद्वैतवाद तौ हो ही नहीं सकैगा अब जिस श्रुतिसे ज्ञानलाभ होय ऐसी श्रुति कहनी होगी, यदि श्रुति नहीं कहोगे तौ और कोई ज्ञानलाभका उपाय नहीं है ॥ ९९ ॥

## निदिध्यासनकी आज्ञा ।

**त्रिपंचांगान्यथो वक्ष्ये पूर्वोक्तस्य हि लब्धये ।**
**तैश्च सर्वैः सदा कार्यं निदिध्यासनमेव तु ॥ १००॥**

तदेवमेतावता ग्रंथसंदर्भेण मुख्याधिकारिणो वैराग्यादिसा- धनचतुष्टयपूर्वकं वेदांतवाक्यविचार एव प्रत्यगभिन्नब्रह्मापरोक्ष- ज्ञानद्वारा मुख्यं मोक्षकारणमित्यभिहितम् । इदानीमसकृद्विचारे- पि बुद्धिमांद्यविषयासक्त्यादिप्रतिबंधेनापरोक्षज्ञानं यस्य न जाय- तस्य मंदाधिकारिणो निर्गुणब्रह्मोपासनमेव मुख्यं साधनमित्य- भिप्रेत्य ससाधनं ध्यानयोगं प्रतिजानत आचार्याः–त्रिपंचेति । अथोशब्दोऽधिकारिभेदार्थः । क्वचित् 'अत' इति पाठस्तस्मि- पक्षे यतो मंदाधिकारी विचारं न लभतेऽतो हेतोरित्यर्थः । त्रिपंच त्रिगुणितानि पंच, पंचदशेत्यर्थः । तत्संख्याकान्यंगा- निदिध्यासनांगिसाधकसाधनविशेषान् यज्ञसाधकप्रयाजादिव- त्यर्थः । वक्ष्ये वक्ष्यामि । तैर्वक्ष्यमाणैः सर्वैरंगैर्निदिध्यासनं- कार्यं नतु तूष्णीमवस्थानमुचितमित्यर्थः । निदिध्यासनकर्तव्य- प्रतिज्ञाप्रयोजनमाह–पूर्वोक्तस्येति । पूर्वोक्तस्य स्वरूपावस्थान- लक्षणमोक्षस्य सिद्धय इति । हीति वेदांतप्रसिद्धौ । तुशब्दः पातंजलवैलक्षण्यलक्षणेन मोक्षस्य सिद्धय इति । अनेनाष्टांगप्रतिपादकं पातंजलमवैदिकत्वाद्वैशेषिकादिवदनादेय- मिति ध्वनितम् ॥ १०० ॥

इसके अनन्तर पूर्व कहे हुए ज्ञानलाभके अर्थ १५ पन्द्रह निदि- ध्यासनके अङ्ग कहूंगा, उन्हीं अङ्गोंके द्वारा सदा निदिध्यासन करना चाहिये ॥ १०० ॥

निदिध्यासनकी आवश्यकता ।

नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदात्मनः ।
तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥१०१॥

मंदाधिकार्यन्यत्सर्वं कर्म सगुणोपासनविचाररूपं साधनं च विहाय श्रद्धयाचार्योक्तप्रकारेण निर्गुणं ब्रह्मैव निदिध्यासेदित्याह—नित्येति । स्पष्टम् ॥ १०१ ॥

निदिध्यासनके विना सच्चिदानन्द ब्रह्मकी प्राप्ति नहीं होय है इस कारण ब्रह्मज्ञानके जाननेकी इच्छा करनेवाला बहुत कालतक मंगलके अर्थ निदिध्यासन करै ॥ १०१ ॥

निदिध्यासनके अंग ।

यमो हि नियमस्त्यागो मौनं देशश्च कालता ।
आसनं मूलबंधश्च देहसाम्यं च दृक्स्थितिः ॥१०२॥
प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यंगानि वै क्रमात् १०३

ननु कानि तान्यंगानि यैः सह निदिध्यासनं कर्त्तव्यमित्यपेक्षायां तानि निर्दिशति—यम इति द्वाभ्याम् । उत्तानार्थावुभावपि श्लोकौ ॥ १०२ ॥ १०३ ॥

यम, नियम, त्याग, मौन, देश, काल, आसन, मूलबन्ध, देहसाम्य, दृकस्थिति, प्राणसंयमन, प्रत्याहार, धारणा, आत्मध्यान, समाधि, यह सम्पूर्ण अंग क्रमसे कहे हैं ॥ १०२ ॥ १०३ ॥

यमका निरूपण ।

सर्वं ब्रह्मेति विज्ञानादिंद्रियग्रामसंयमः ।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १०४ ॥

इदानीमेतेषां प्रत्येकं निर्देशक्रमेण स्वाभिमतानि लक्षणा-न्याह—सर्वमित्याद्येकविंशत्या । तत्र प्रथमोद्दिष्टं यमं तावद्द-यति—सर्वमिति । सर्वमाकाशादि देहांतं जगद्ब्रह्म, बाधसामाना-धिकरण्यद्वारा स्थाणुपुरुषादिवदित्यर्थः । इति विज्ञानान्निश्चय-द्धेतोरिंद्रियाणां श्रोत्रादीनामेकादशकरणानां ग्रामः समू-स्तस्य संयमः सम्यक् शब्दादिविषयाणां विनाशित्वसातिश-त्वदुःखदत्वादिदोषदर्शनात् यमो विषयेभ्यो निवारणम् अ-यम इति संप्रोक्तः,नतु केवलमहिंसादिरित्यर्थः । ततश्च कि-आह-अभ्यसनीय इति । अयं मुहुर्मुहुरभ्यसनीय इति॥१०४

सम्पूर्ण जगत् ब्रह्म है इस प्रकार निश्चय करके सम्पूर्ण इं-योंका निग्रह करना है सो 'यम' कहावे है, इसका अभ्यास पुरु-वारंवार करना योग्य है ॥ १०४ ॥

## नियमका निरूपण ।

**सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।**
**नियमो हि परानंदो नियमात्क्रियते बुधैः ॥ १०५**

एवं यमं लक्षयित्वा नियमं लक्षयति—सजातीयेति सजातीयं प्रत्यगभिन्नं परं ब्रह्म, तदेकाकारा वृत्तिः प्रवा-सजातीयप्रवाहः । यद्वा सजातीयानामसंगोऽहमविक्रियोऽह-त्यादिप्रत्यगभिन्नब्रह्मप्रत्ययानां प्रवाहः । च पुनः—विजातीयति-स्कृतिः । विजातीयं ब्रह्मात्मविलक्षणम्,जगत्पूर्वसंस्काराज्जायमा-तदाकारा वृत्तिरित्यर्थः । तस्य तिरस्कृतिर्दोषस्मृत्याऽधिकोपेक्-ऽनादर इत्यर्थः।अयं नियम उक्तः। नतु केवलं शौचादिरित्य-

हीत्युपनिषत्प्रसिद्धौ । नन्वनयोरुपनिषत्प्रसिद्ध्या कः पुरुषार्थ इति चेदत आह—परानंद इति । ततश्च किमत आह—नियमादित्यादि । सुगमम् ॥ १०५॥

सजातीय प्रवाह अर्थात् मैं ब्रह्म हूं इस प्रकार ज्ञानका प्रवाह और विजातीयतिरस्कृति अर्थात् ब्रह्मसे अतिरिक्त सम्पूर्ण संसार मिथ्या है इस प्रकार ज्ञानको नियम कहे हैं ॥ १०५ ॥

त्यागका निरूपण ।

**त्यागः प्रपंचरूपस्य चिदात्मत्वावलोकनात् ।**
**त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः॥१०६॥**

इदानीं तृतीयं त्यागं लक्षयति—त्याग इति । प्रपंचरूपस्य प्रपंचो नामरूपलक्षणः । रूप्यते घटोऽयं पटोऽयम् इत्यादि नामरूपतो निरूप्यते व्यवह्रियते प्रकाश्यते येन तत्प्रपचरूपं सर्वाधिष्ठानभूतं पदार्थस्फुरणं तस्य । चिदात्मत्वावलोकनाच्चिदजडं स्वत एव प्रकाशमानं ब्रह्म, तदात्मस्वरूपं यस्य तद्भावस्तस्यावलोकनमनुसंधानं तस्माद्धेतोर्यस्त्यागः नामरूपोपेक्षा स एव त्यागस्त्यागशब्दवाच्यः, "ईशावास्यमिदं सर्वम्" इत्यादिश्रुतेः । हीति विद्वदनुभवप्रसिद्धौ । नन्वयं त्यागो न कुत्रापि प्रसिद्ध इत्याशंक्याह—महतां पूज्य इति। तत्र हेतुः सद्य इति। यतोऽयं त्यागः सद्योऽनुसंधानकाल एव मोक्षमयः परमानंदस्वरूपावस्थानरूपः, अत एवात्मतत्त्वविदामिष्टत्वादतिप्रसिद्धोऽयं त्याग इत्यर्थः । तस्मादयमेवं मुमुक्षुणा कर्तव्यो नान्यः । केवलस्वकर्मादिकरणरूप इति भावः । एवमग्रेऽप्यूह्यम् ॥१०६॥

चैतन्यस्वरूप तत्त्वको अवलोकन करके जो प्रपञ्चका अर्थात् घट पटादि नामसे व्यवहृत पदार्थोंका त्याग करना है सो त्याग कहावे

है इसका महात्मा लोग बडा आदर करे हैं जिस कारण यह शीघ्रही मोक्षको देय है ॥ १०६ ॥

### मौनका निरूपण ।

यस्माद्वाचो निवर्तंते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ॥ १०७ ॥

अथ मौनं लक्षयति—यस्मादिति । शब्दप्रवृत्तिनिमित्त-जातिक्रियादेरभावात् मनोवाचामगोचरं यन्मौनं वक्तुमशक्यं यद्ब्रह्म तथापि योगिभिर्गम्यं ज्ञानयोगिभिः प्रत्यगभिन्नत्वेन प्राप्यं तत्प्रसिद्धमेव ब्रह्मरूपं मौनं सर्वदा बुधो विवेकी भवेत् । तदहमस्मीत्यनुसंदध्यादित्यर्थः ॥ १०७ ॥

जिसको वाणी और मन नहीं प्राप्त होसके हैं और योगी लोकोंको लब्ध होय है ऐसे परब्रह्मका ही नाम मौन है, पण्डित जन तिस ब्रह्मका 'मैं ब्रह्म हूं' इस प्रकार अनुसन्धान करै ॥ १०७ ॥

वाचो यस्मान्निवर्त्तंते तद्वक्तुं केन शक्यते ।
प्रपचो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥१०८॥
इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् ।
गिरा मौनं तु बालानां प्रयुक्तं ब्रह्मवादिभिः ॥ १०९ ॥

नन्विदं प्रत्यगभिन्नब्रह्मानुसंधानं ध्यानरूपं चतुर्द्दशमंगं प्रतीयते इत्याशंक्य स्वारस्यात्प्रकारान्तरेण मौनमेव लक्षयति सार्द्धेन-वाच इति । अयं भावः-शब्दप्रवृत्तिनिमित्ताभावाद्ब्रह्म यथा वागविषयं तथा नामरूपजात्यादिप्रपंचोऽपि सदसदादिविकल्पासह-त्वाद्वागतीतः ॥१०८॥ इतीति । इत्युक्तप्रकारेण ब्रह्मजगतोर्विंवा-

दत्यागरूपंवा तन्मौनं भवेत् । केषामित्याकांक्षायां सतां चेदं प्रसिद्धमित्याह–सतामिति। सत्पुरुषाणां सहजास्थितिनाम्ना प्रसिद्धमित्यर्थः । ननु वाङ्नियमनमेव प्रसिद्धं मौनमिति चेदत आह–अर्द्धेन–गिरेति ॥ १०९ ॥

जिसको वाणी नहीं प्राप्त होय उसकी वर्णना कौन कर सके है अर्थात् कोई नहीं । यदि प्रपञ्चकी वर्णना करी जाय तौ यह भी शब्दरहित है अर्थात् प्रपञ्चमें भी सत् असत् नाना प्रकारके पदार्थ मालूम होय हैं इस कारण प्रपंचका भी वर्णन नहीं होसके है। इसकोभी मौन कहे हैं, यह मौन साधुपुरुषोंको स्वभावसिद्ध होय है । ब्रह्मवादी लोग बालकके मौनको मौन कहे हैं ॥ १०८ ॥ १०९ ॥

## देशका निरूपण ।

आदावंते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥११०॥

इदानीं देशं लक्षयति–आदाविति। अत्र जनस्य त्रैकालिकाभाव आनुभविकः स्वप्रतीत्या ज्ञेयः, नतु लौकिकशास्त्रीयप्रतीतिभ्याम् । विरोधादिति भावः । स्पष्टमन्यत् ॥ ११० ॥

जहां आदि, अन्त, मध्यमें कहीं भी जन न होय जिस करके निरन्तर संसार व्याप्त रहै उस देशका नाम निर्जन देश है, सदा जनशून्य स्थान ही योगसाधनके अर्थ उपयुक्त होय है ॥ ११० ॥

## कालका लक्षण ।

कलनात्सर्वभूतानां ब्रह्मादीनां निमेपतः ।
कालशब्देन निर्दिष्टो ह्यखंडानंद अद्वयः ॥ १११ ॥

अथ कालं लक्षयति–कलनादिति। निमेपत आरभ्य कलनात्सर्गस्थितिप्रलयाधारत्वादित्यर्थः । शेषं स्पष्टम् ॥ १११ ॥

जिसके निमेषमात्रमें ब्रह्मादि सर्वभूतोंका कलन ( सृष्टि, स्थिति, प्रलय, ) होय है इस कारण अखण्ड आनन्दस्वरूप अद्वय ब्रह्म ही काल शब्द करके कहा जाय है ॥ १११ ॥

## आसनका निरूपण ।

**सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिंतनम् ।**
**आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥११२॥**

आसनं लक्षयति—सुखेनैवेति । यस्मिन्सुखे सुखरूपे ब्रह्मणि चिंतनं कर्त्तव्याकर्त्तव्यचिंता नैव भवेत् तद्ब्रह्मासनं विजानीयादित्यन्वयः । कीदृशं ब्रह्म ? अजस्रं कालत्रयावस्थायीत्यर्थः । सुगममन्यत् ॥ ११२ ॥

जिसमें सदा भलीप्रकार सुखसे ब्रह्म विचार होय उसको आसन कहे हैं उससे अतिरिक्तमें ब्रह्म विचार नहीं होय है, इस कारण आसनसे अन्य सुखकारक नहीं होय है, किन्तु सुख नाश होय है । सो आसन पद्म स्वस्तिकादिक जानना ॥ ११२ ॥

## सिद्धासनका लक्षण ।

**सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् ।**
**यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ११३**

प्रसंगादासनविशेषं लक्षयति—सिद्धमिति । सिद्धं च तदासनं च । अथवा सिद्धानामासनं सिद्धासनमिति । कर्मधारयतत्पुरुषसमासाभ्यां ब्रह्मैवेत्यर्थः ॥ ११३ ॥

जिससे सिद्धपुरुष सिद्ध कहलावे हैं और जिसमें सिद्ध लीन रहे हैं और जो विश्वका अधिष्ठान स्वरूप अव्यय है वह सिद्धासन कहावे है ॥ ११३ ॥

## मूलबन्धका निरूपण ।

**यन्मूलं सर्वभूतानां यन्मूलं चित्तबंधनम् ।**
**मूलबंधः सदा सेव्यो योग्योऽसौ राजयोगिनाम् ११४**

अथ मूलबंधं लक्षयति—यन्मूलमिति । आकाशादिसर्वभूतानां यन्मूलमादिकारणं ब्रह्म तथा चित्तबंधनं चित्तस्य बंधकारणं मूलाऽज्ञानं तदपि यन्मूलं यदाश्रयं पृथक्सत्ताशून्यत्वादिति । यद्वा चित्तस्य बंधनमेकत्र लक्ष्ये निग्रहस्तदपि यन्मूलं यस्य ब्रह्मणः प्राप्तिनिमित्तमित्यर्थः । स मूलबंध इत्यन्वयः । राजयोगिनां व्यवहारेऽप्यविक्षिप्तचित्ततालक्षणो राजयोगस्तद्वतां ज्ञानपरिपाकयुक्तानामित्यर्थः । शेषं स्पष्टम् ॥ ११४ ॥

आकाशादिपञ्चभूतोंका आदि कारण और जो चित्तैकाग्र्यका मूल है सो मूलबन्ध कहावे है । यह मूलबन्ध राजयोगियोंको सदा सेवन करना योग्य है ॥ ११४ ॥

देहसाम्यका निरूपण ।

अंगानां समतां विद्यात्समे ब्रह्मणि लीयते ।
नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ ११५ ॥

इदानीं देहसाम्यं लक्षयति-अंगानामिति । अंगानां ब्रह्मण्यध्यस्तानां स्वभावविषयाणामधिष्ठानसमत्वदृष्ट्या समतां विद्याज्जानीयात् चेत्समे ब्रह्मणि । अंगवैषम्यमित्यत्राध्याहारः । तच्चेन्नो लीयते समब्रह्मरूपतया न तिष्ठतीत्यर्थः । तर्हीत्यत्रशेषः । शुष्कवृक्षवदंगानामृजुत्वं सरलत्वमचंचलत्वं च यत्तत्समानत्वं नैव भवेदिति संबंधः । अंगानां विषमस्वभावत्वादिति भावः ॥ ११५ ॥

सब प्राणियोंमें समदृष्टि करके जो समान ब्रह्ममें लीन होय है सो देहसाम्य कहावे है । सूखे हुए काष्ठकी तरह समान वस्तुको समता नहीं कहै हैं ॥ ११५ ॥

दृक्स्थितिका निरूपण ।

दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥११६॥

इदानीं दृक्स्थितिं लक्षयति—दृष्टिमिति । ब्रह्मणि फल-व्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वात् दृष्टिमंतःकरणवृत्तिं ज्ञान-मयीमखंडब्रह्माकारां कृत्वा जगत्सर्वं ब्रह्ममयं पश्येत् । ब्रह्मैवेदं सर्वमित्येतावन्मात्रैव वृत्तिः कार्येति भावः । स्पष्ट-मन्यत् ॥ ११६ ॥

दृष्टिको ज्ञानमय करके उस दृष्टिके द्वारा ब्रह्ममय जो जगत्को देखना है यही दृष्टि परम उदार मङ्गलकी देनेवाली है, नासाके अग्र-भागमें देखनेको दृष्टि नहीं कहे हैं ॥ ११६ ॥

**दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् ।**
**दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रावलोकिनी ॥ ११७ ॥**

ननु तथापि ब्रह्मणि वृत्तिप्रवृत्तिनिमित्तजात्याद्यभावादिंद्रि-यादिप्रत्यक्षविषयस्य जगतो ब्रह्मरूपत्वेन दर्शनं कथं स्यादि-त्याशंक्य स्वारस्यात्पक्षान्तरेणाह—दृष्टीति । वाशब्दः पक्षां-तरे । दृष्टीत्यादि श्रोत्रादिसर्वत्रिपुटीनामुपलक्षणम् । यत्र यस्मिन् ब्रह्मस्वरूपे दृष्ट्यादिसर्वत्रिपुटीनां विरामो लयो भवेत्तत्र तस्मि-न्नेव प्रपंचातीते दृष्टिरंतःकरणवृत्तिः कर्तव्या, न नासिकाग्रा-वलोकिनीत्यर्थः ॥ ११७ ॥

और जिसमें दृष्टि, दर्शन एवं दृश्यका विराम होय है उसको भी दृष्टि कहे हैं । वही दृष्टि करना योग्य है, नासाके अग्रभागमें देखना मात्र रूप जो दृष्टि है सो योग्य नहीं है ॥ ११७ ॥

प्राणायामका सामान्य लक्षण ।

**चित्तादिसर्वभावेषु ब्रह्मत्वे सर्वभावनात् ।**
**निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ११८ ॥**

अथ प्राणायामं लक्षयति—चित्तादीति । मनोऽधीनत्वा-

त्माणस्य मनोनिरोधेनैव प्राणनिरोधः, नतु प्राणनिरोधेनैव पातंजलाभिमतेन मनोनिरोधस्तदधीनत्वाभावादिति फलितार्थः ॥ ११८ ॥

चित्तको आदि ले सब प्रकारके पदार्थोंमें ब्रह्म भावना कर सब प्रकारकी इन्द्रियोंकी वृत्तियोंका जो रोकना है सो प्राणायाम कहावे है॥११८॥

रेचक और पूरक प्राणायाम ।

**निषेधनं प्रपंचस्य रेचकाख्यः समीरणः ।**
**ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥ ११९ ॥**

अमुं प्राणायामं स्वाभिमतेन रेचकादिविभागत्रयेण लक्षयति सार्द्धेन—निषेधनमिति । स्पष्टम् ॥ ११९ ॥

प्रपञ्चका निषेध अर्थात् मिथ्यात्वको 'रेचक' नाम प्राणायाम कहे हैं। एक ब्रह्म ही सर्व रूप है ऐसी जो वृत्ति है सो 'पूरक' नाम प्राणायाम कहावे है ॥ ११९ ॥

कुम्भक प्राणायाम ।

**ततस्तद्वृत्तिनैश्चल्यं कुंभकः प्राणसंयमः ।**
**अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥१२०॥**

तत इति । अनात्मोपेक्षाऽऽत्मानुसंधानतद्दार्ढ्यानि रेचकादिशब्दवाच्यानीति भावार्थः। नन्वयं त्रिविधोऽपि प्राणायामो न कुत्रापि श्रुत इत्यपेक्षायामत्राधिकारिणमाहार्द्धेन—अयमिति। अयमुक्तलक्षणः प्राणायामः । चकाराद्भेदत्रययुक्त इत्यर्थः । प्रबुद्धानां प्रकर्षेणासंभावनादिरहितत्वेन बुद्धानामात्मबोधयुक्तानाम् । निःसंदेहाऽपरोक्षज्ञानिनामित्यर्थः । योग्य इत्यध्याहारः । तर्ह्यज्ञानां कीदृश इत्यत आह—अज्ञानामिति ॥ १२० ॥

अनन्तर निश्चलतासे एक ब्रह्म ही स्वरूप है ऐसा जो निश्चय होता है सो ' कुम्भक ' प्राणायाम कहावे है । इस प्रकार रेचक, पूरक और

कुम्भक, ज्ञानियोंके प्राणायाम होय हैं । अज्ञानी पुरुष वायु रोककर नासिकाको पीडा देनेको प्राणायाम कहै हैं ॥ १२० ॥

प्रत्याहारका लक्षण ।

**विषयेष्वात्मतां दृष्ट्वा मनसश्चितिमज्जनम् ।**
**प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥१२१॥**

इदानीं प्रत्याहारं लक्षयति—विषयेष्विति । विषयेषु घटादिषु । यद्वा शब्दादिषु अन्वयव्यतिरेकाभ्यामात्मतां सत्तास्फुरत्ताप्रियतामात्रतां दृष्ट्वानुसंधाय मनसोऽन्तःकरणस्य चितिमज्जनं नामरूपक्रियानुसंधानराहित्येन चित्स्वरूपतयावस्थानं स प्रत्याहारः । ततः किमत आह—अभ्यसनीय इति ॥ १२१ ॥

विषयोंके विषे आत्मत्वको देखकर अर्थात् सर्व जगत्को ब्रह्ममय देखकर और चैतन्यस्वरूप आत्मामें चित्तको जो लगाना है सो प्रत्याहार कहावे है । मोक्षकी इच्छा करनेवाले पुरुषोंको यह प्रत्याहार अवश्य अभ्यास करने योग्य है ॥ १२१ ॥

धारणाका लक्षण ।

**यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।**
**मनसो धारणं चैव धारणा सा परा मता ॥ १२२ ॥**

धारणां लक्षयति—यत्रेति । यत्र यत्र यस्मिन् यस्मिन् पदार्थे मनो याति गच्छति तत्र तत्र ब्रह्मणः सत्तादिमात्रस्य नामाद्युपेक्षया दर्शनादनुसंधानान्मनसो धारणं ब्रह्मण्येव स्थिरीकरणं धारणेत्यन्वयः । नन्वाधारादिषट्चक्रमध्ये एकत्र मनसो धारणं 'धारणा' इति प्रसिद्धमत आह—सेति । साऽत्रोक्तलक्षणा धारणा परोत्कृष्टा मता । तत्त्वबोधवतामिति शेषः । अन्या तु

पातंजलाभिमता प्राणायामादिवदपरेति भावः । च—एवेत्यव्यय-द्वयं वेदांतविद्वदनुभवप्रसिद्धिं द्योतयति ॥ १२२ ॥

जहां जहां मन जाय तहां तहां ब्रह्मस्वरूप दर्शन पूर्वक जो मनको निश्चल करना है सो सबसे उत्कृष्ट धारणा कहावे है ॥ १२२ ॥

ध्यानका लक्षण ।

ब्रह्मैवास्मीति सद्वृत्त्या निरालंबतया स्थितिः ।
ध्यानशब्देन विख्याता परमानंददायिनी ॥ १२३ ॥

अथात्मध्यानं लक्षयति—ब्रह्मैवेति । सद्वृत्त्या सती प्रमाणांतरबाधायोग्या वृत्तिस्तया वृत्त्या निरालंबतया देहाद्यनुसंधान-राहित्येन स्थितिः, अवस्थानमित्यर्थः । शेषं स्पष्टम् ॥ १२३ ॥

सम्पूर्ण बाधाओंको दूरकर देहानुसन्धान परित्यागपूर्वक सम्पूर्ण ब्रह्ममय है इस प्रकार ज्ञान करके जो ब्रह्मस्वरूप अवलम्बन कर स्थिति करना है उसको आत्मध्यान कहे हैं, इसके होनेसे परम आनंद प्राप्त होय है ॥ १२३ ॥

समाधिका लक्षण ।

निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥ १२४ ॥

अथान्त्यसमाधिरूपं पंचदशमंगं लक्षयति—निर्विकारतयेति । निर्विकारतया विषमानुसंधानरहिततयांतः करणवृत्त्या, पुनरनंतरमेव ब्रह्माकारतया यत् सम्यक्प्रपंचसंस्काररहितं ध्यातृ-ध्येयाकारवृत्तिशून्यं वृत्तिविस्मरणं द्वैताननुसंधानं स समाधिः । पंचदशमंगमित्यर्थः । ननु वृत्तिविस्मरणस्याज्ञानरूपत्वा-त्कथं समाधित्वमित्याशंक्य ब्रह्मात्मैक्यबोधाभावे केवलवृत्ति-विस्मरणस्य तथात्वेऽपि न ब्रह्मज्ञानसहितस्य तथात्वमित्याशयेन समाधिं विशिनष्टि—ज्ञानसंज्ञक इति । ज्ञानमिति संज्ञा यस्य स

ज्ञानसंज्ञकः । ब्रह्माकारतया स्फुरणरूप इत्यर्थः । उक्तं च—"समाधिः संविदुत्पत्तिः परजीवैकतां प्रति" इति ॥ १२४ ॥

निर्विकार चित्त होकर अपनेको ब्रह्मस्वरूप जान करके सम्पूर्ण प्रकारके प्रपञ्च भावको परित्याग करना ज्ञानयोंकी समाधि कहावै है ॥ १२४ ॥

## निदिध्यासनकी अवधि ।

**इमं चाकृत्रिमानंदं तावत्साधु समभ्यसेत् ।**
**वश्यो यावत्क्षणात्पुंसः प्रयुक्तः सन्भवेत्स्वयम् ॥१२५॥**

इदानीं यदर्थं सांगमिदं निदिध्यासनमुक्तं तदाह—इममिति । अकृत्रिमानंदं स्वरूपभूतानंदाभिव्यंजकं निदिध्यासनमित्यर्थः । चकाराद्यथाबुद्धि वेदांतविचारमपीति । स्पष्टमन्यत् ॥ १२५ ॥

जबतक पूर्व कहे हुए आनन्दमय ब्रह्मके वशमें नहीं होय तबतक अकृत्रिम आनन्द ( निदिध्यासन ) उत्तम प्रकारसे अभ्यास करे, परन्तु जिस समय निदिध्यासनादि द्वारा स्वयं ब्रह्मस्वरूप होजाय उस समय निदिध्यासनादिकका कोई प्रयोजन नहीं ॥ १२५ ॥

## निदिध्यासनका फल ।

**ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।**
**यत्स्वरूपं न चैतस्य विषयो मनसो गिराम् ॥१२६॥**

एवमभ्यसतः फलमाह—तत इति । साधननिर्मुक्तः साधनाभ्यासरहित इत्यर्थः । एतस्य योगिनः तद्वेदांतप्रसिद्धं स्वरूपं ब्रह्मैवेति भावः ॥ १२६ ॥

पूर्व कहे हुए योगाभ्यास करनेसे पुरुष सिद्ध होय है, सम्पूर्ण प्रकारके साधनोंसे छूट जाय है और योगियोंका राजा होय है । उस ब्रह्मका स्वरूप योगियोंके मन वाणीका भी विषय नहीं है ॥ १२६ ॥

## समाधिमें विघ्न ।

**समाधौ क्रियमाणे तु विघ्ना आयांति वै बलात् ।**
**अनुसंधानराहित्यमालस्यं भोगलालसम् ॥ १२७ ॥**

लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता।
एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥१२८॥

अखंडैकरसब्रह्मस्वरूपत्वेनावस्थानलक्षणमोक्षफलदोऽयं समाधिपर्यंतो योगो गुर्वनुग्रहवतां सुकरोऽस्ति तथापि सुकर इत्यनादरो न कार्यः, विघ्नबाहुल्यसंभवादित्याहद्वाभ्यां–समाधाविति। स्पष्टोऽर्थः ॥ १२७ ॥ लय इति। तत्र लयो निद्रा। तमः कार्याकार्याऽविवेकः। विक्षेपो विषयस्फुरणम्। रसास्वादो धन्योऽहमित्याद्यानदाकारा वृत्तिः। च पुनः शून्यता चित्तदोषः, रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभावः कषायः। क्षुब्धतेत्यर्थः। स्पष्टमन्यत् ॥ १२८ ॥

समाधि साधन कालमें अनेक प्रकारके विघ्न आयके बलसे निरोध करे हैं, वह विघ्न यह हैं–अनुसन्धानराहित्य अर्थात् किसीप्रकार अनुसंधान नहीं रहना, आलस, भोगलालसा, लय अर्थात् निद्रा, तम अर्थात् कार्य्याकार्यका अविवेक, विक्षेप अर्थात् विषयानुराग, रसास्वाद अर्थात् मैं वडा धन्य हूँ इस प्रकार आनन्दका अनुभव करना, शून्यता अर्थात् रागद्वेषादिकसे चित्तकी विकलता, इस प्रकार विघ्नोंके समूहको ब्रह्मवेत्ताओंको शनैःशनैः त्याग करना योग्य है ॥ १२७ ॥ १२८ ॥

बन्ध–मोक्षमें वृत्तिकी कारणता।

भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता।
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत् ॥ १२९ ॥

वृत्तिरेव बंधमोक्षकारणमित्याह–भावेति। भाववृत्त्या घटाद्याकारवृत्त्या भावत्वं तन्मयत्वम्। भवतीति शेषः। शून्यवृत्त्या अभाववृत्त्या। शून्यता जडतेत्यर्थः। हीति लोकप्रसिद्धौ। तथा ब्रह्माकारवृत्त्या पूर्णत्वम्। हीति विद्वत्प्रसिद्धौ। ततः किमत आह–पूर्णत्वमिति ॥ १२९ ॥

जिसके चित्तकी वृत्ति घटादि भाव पदार्थोंमें जाय है उसको घटादि पदार्थोंका प्रकाश होय है, जिसके चित्तकी वृत्ति शून्यताको आश्रय करे है उसका चित्त शून्यमय होय है। इसी प्रकार जिसके चित्तकी वृत्ति चैतन्यस्वरूप ब्रह्ममें जाय है उसको पूर्ण ब्रह्मका लाभ होय है। इससे पुरुषको जिसप्रकार पूर्णब्रह्मत्वका लाभ होय उसतरहका अभ्यास कर लाभ उठाना योग्य है ॥ १२९ ॥

अब्रह्मवृत्तिवालेकी निन्दा ।

ये हि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ।
ते तु वृथैव जीवंति पशुभिश्च समा नराः ॥ १३० ॥

इदानीं ब्रह्ममयीं वृत्तिं स्तोतुं तद्वृत्तित्यागपरान्निंदति—ये हीति । ये एनां ब्रह्माख्यां वृत्तिं जहति त्यजंति ते तु वृथैव जीवंतीत्यन्वयः । स्पष्टमन्यत् ॥ १३० ॥

जो पुरुष परमपवित्र और सबसे उत्कृष्ट ब्रह्मवृत्तिका परित्याग करे हैं वे मनुष्य इस संसारमें वृथा ही पशुओंके समान जीवन धारण करे हैं ॥ १३० ॥

ब्रह्मवृत्तिवालेकी प्रशंसा ।

ये हि वृत्तिं विजानंति ज्ञात्वापि वर्धयंति ये ।
ते वै सत्पुरुषा धन्या वंद्यास्ते भुवनत्रये ॥ १३१ ॥

संप्रति तामेव वृत्तिं विवर्द्धयितुं ब्रह्मवृत्तिपरान्सत्पुरुषान् स्तौति—ये हीति । स्पष्टम् ॥ १३१ ॥

जो ब्रह्मवृत्तिको जानते हैं और जानकर बढावै हैं वह सत्पुरुष धन्य और तीनों भुवनमें पूजनीय होय हैं ॥ १३१ ॥

ब्रह्मवृत्तिवालेकी मुक्ति ।

येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ।
ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ १३२ ॥

एवं ब्रह्मवृत्तिपरान्स्तुत्वाऽधुना तेषां ब्रह्मप्राप्तिरूपं फलमाह-येषामिति । सुगमम् ॥ १३२ ॥

जिन पुरुषोंकी ब्रह्मवृत्ति अत्यन्त वृद्धिको प्राप्त होय है और भलीप्रकार पक जाय है उनको ही सर्व स्वरूप ब्रह्मका लाभ होय है और जो केवल जिह्वाहीसे अहं ब्रह्म कहै हैं उनको ब्रह्मका लाभ किसी समय भी नहीं होय है ॥ १३२ ॥

केवल शब्दवादियोंकी निंदा ।

**कुशला ब्रह्मवार्त्तायां वृत्तिहीनाः सुरागिणः ।**
**तेऽप्यज्ञानितया नूनं पुनरायांति यांति च ॥ १३३ ॥**

तानेव शब्दवादिनो निंदति-कुशला इति।स्पष्टम्॥ १३३॥

जो पुरुष ब्रह्मवृत्ति करके हीन होय है और ब्रह्मवेत्तापन प्रकाश करै हैं इसी प्रकार ब्रह्ममय दिखावें हैं वह अज्ञान वश वारंवार संसारमें आवागमन करै हैं ॥ १३३ ॥

ब्रह्मनिष्ठोंकी वृत्ति ।

**निमेषार्धं न तिष्ठंति वृत्तिं ब्रह्ममयीं विना ।**
**यथा तिष्ठंति ब्रह्माद्याः सनकाद्याः शुकादयः ॥१३४॥**

यत एवं तस्माद्ब्रह्मनिष्ठैर्ब्रह्मवृत्त्यैव सर्वदा स्थातव्यमिति सूचयितुं ब्रह्मादीनामुदाहरणमाह-निमेषेति। यथा ब्रह्माद्यास्तथा सनकाद्याः, यथा सनकाद्यास्तथा शुकाद्या इति संप्रदायो दर्शितः। एतेन ब्रह्मादिसेव्यत्वादिति श्रेष्ठोऽयं समाधिपर्यंतो राजयोगः सर्वदा मुमुक्षुभिः सेवनीय इति ध्वनितम् ॥ १३४ ॥

जिस प्रकार ब्रह्मादि देवगण सनकादि मुनिगण शुकादि ब्रह्मपरायण गण सर्वकालमें ब्रह्ममें लीन रहै हैं तिसी प्रकार मोक्षकी इच्छा करनेवाले पुरुष ब्रह्ममयी वृत्तिके विना अर्थात् ब्रह्मानुसन्धानके विना पलभर भी नहीं खोवे हैं अर्थात् सदा ब्रह्मवृत्तिमें तत्पर रहै हैं ॥१३४॥

वेदान्तसिद्धान्तका निरूपण ।

कार्ये कारणतायाता कारणे नहि कार्यता ।
कारणत्वं ततो गच्छेत्कार्याभावे विचारतः ॥ १३५ ॥

तदेवं स्वाभिमतं सांगं राजयोगमभिधाय पूर्वोपक्रांतं सांख्यापरपर्यायं वेदांतविचारमुपसंहरति—कार्य इत्यादिपंचभिः श्लोकैः । कार्ये घटपटादिरूपे विकारे कारणता मृत्तंत्वादिरूपा सर्वविकाराधिष्ठानता आयाताऽनुगता,कारणे तु कार्यता नहीति प्रसिद्धम् । ततः कारणात्कार्याभावे कारणत्वं गच्छेत् । ननु कथं कारणे कार्याभाव इत्यत आह—विचारत इति । यथायं दृष्टांतस्तथाकाशादिकार्ये कारणता । आकाशोऽस्तिभातीत्यादिव्यवहारहेतुभूता सत्यज्ञानादिरूपब्रह्मणः कारणता आयाता अनुगता, कारणे ब्रह्मणि तु आकाशादिकार्यता नहीति । अतः परमार्थतः आकाशाद्यभावे ब्रह्मणः कारणतापि नहीति दार्ष्टांतिकोऽर्थः ॥ १३५ ॥

कार्य्यमें कारणता रहे है परन्तु कारणमें कार्य्यता नहीं मालूम होय है, कार्य्यका भाव होनेसे कारणता अपने आप सिद्ध हो जाय है । इसी प्रकार विचार करनेसे आकाशादि कार्य सम्पूर्ण अनित्य मालूम होय हैं और केवल ब्रह्म ही कारणस्वरूप सत्य मालूम होय है ॥१३५॥

अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ।
द्रष्टव्यं मृद्घटेनैव दृष्टांतेन पुनः पुनः ॥ १३६ ॥

ततः किमत आह—अथेति । अथानंतरं कार्यकारणभावनिवृत्तौ यच्छुद्धं मनोवाचामगोचरं वस्तु तद्भवेत् । "यतो वाचो निवर्त्तंते" इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः । ननु बुद्धेः

क्षणिकत्वेनैकदा तथा विचारितेऽपि पुनरन्यथैव भातीत्यत आह—द्रष्टव्यमिति ॥ १३६ ॥

जब कार्य कारणभाव निवृत्त होय है तब शुद्ध मन और वाणीसें अगोचर जो ब्रह्मवस्तु है सोई रहै है, जैसे घटके नाश होनेपर मृत्तिका ही बाकी रहे है ऐसा ही वारम्वार समझना ॥ १३६ ॥

**अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् ।**
**उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥१३७॥**

न केवलमयं विचारो ज्ञानसाधनमेवापितु ध्यानसाधन-मपीत्याह—अनेनेति । अनेनैव प्रकारेण शुद्धचित्तानां वृत्ति-ज्ञानम् उदेति, ततः परं ब्रह्मात्मिका वृत्तिर्भवेदिति योजना। पदानामर्थस्तु स्फुट एव ॥ १३७ ॥

इस प्रकार ब्रह्मात्मिका वृत्ति होय है, तदनन्तर शुद्ध चित्त होनेसे वृत्तिके ज्ञानका उदय होय है ॥ १३७ ॥

**कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ।**
**अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥ १३८ ॥**

तमेव विचारं विशदयति द्वाभ्याम्—कारणमिति । आदौ प्रथमं कारणं व्यतिरेकेण कार्यविरहेण विचारयेत् । पुनस्तत् कारणमन्वयेनानुवृत्त्या कार्येऽपि नित्यं प्रपश्यतीति ॥१३८॥

मुमुक्षु पुरुष पहले कारणके विना कार्य्यकी उत्पत्ति नहीं होय इससे व्यतिरेकानुमानसे कारणका निश्चय करे (यथाहि—कार्य्यं सकारणकम्) ऐसे अनुमानमें ( यदि कारणं न स्यात् तर्हि कार्य्यमपि न स्यात् कार्य्यं दृश्यते अतः कारणमप्यनुमीयते ) यदि कारण नहीं होय तो कार्य्य भी नहीं होय, कार्य्य है इस कारण कारणका अनुमान किया जाय है। इस प्रकार व्यतिरेकानुमान होय है ॥ १३८ ॥

कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् ।
कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः ॥ १३९ ॥

अथैवं विचारयेदित्याह—कार्येति । आदौ कार्ये कारणमेव विचारयेत्, पश्चात्तत्कार्यं विसर्जयेत् नानुसंदध्यात् । एवं कार्यवर्जने सति कारणत्वं स्वत एव गच्छेत् । एवं कार्यकारणवर्जनेऽवशिष्टं सच्चिन्मात्रं मुनिर्मननशीलः स्वयमेव भवेदिति ॥ १३९ ॥

पहले कार्य्यसे कारणका निश्चय करै, पीछे कार्य्यका त्याग कर देय, कार्य्यका त्याग करनेपर कारण आप ही अवशिष्ट रह जाय है। इसी प्रकार कार्य्यके वर्जित होनेसे मुनिगण स्वयं चिन्मय स्वरूप हो जाय हैं ॥ १३९ ॥

ब्रह्मभावनासे ब्रह्मत्व ।

भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना ।
पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ १४० ॥

ननु विचारजन्यापरोक्षज्ञानेन मुनेर्ब्रह्मत्वं भवतु नाम, परन्तु परोक्षज्ञानिनः कथं भवेदित्याशंक्य तीव्रभावनया परोक्षज्ञानिनोऽपि ब्रह्मत्वं भवेदिति सदृष्टांतमाह—भावितमिति । अयं भावः—यद्यपि परोक्षज्ञानेन प्रमातृगतावरणनिवृत्तौ सत्यामपि प्रमेयगतमावरणं न निवर्त्तते तथापि निश्चयात्मना निश्चययुक्तबुद्धिमता पुरुषेण यद्वस्तु सच्चिदानंदं ब्रह्म तीव्रवेगेनाऽहर्निशं ब्रह्माकारवृत्त्या भावितं चिंतितं तद्वस्तु ज्ञेयमपरोक्षेण ज्ञातुं योग्यं ब्रह्म शीघ्रमचिरेण पुमान् भवेत् । प्रत्यगभिन्नब्रह्मभावनया पुरुषो ब्रह्मरूपो भवतीत्यर्थः । हीति विद्वत्प्रसिद्धौ । तत्र सर्वलोकप्रसिद्धं दृष्टांतमाह—भ्रमरकीटवदिति । भ्रमरेण कुतश्चिदानीय

जीवन्नेव स्वकुड्यां प्रवेशितो यः कीटः स यथा भयात् भ्रमर-ध्यानेन भ्रमर एव भवति तद्वदिति ॥ १४० ॥

निश्चयात्मा पुरुषकी तीव्रभावना करके जो मनुष्य जिस वस्तुकी चिन्ता करे है शीघ्र ही भ्रमरकीटकी तरह तद्रूप हो जाय है । जैसे भ्रमरकीट कीडाविशेष होय है, वह अपने स्थानमें जिस दूसरे कीडेको लाके धरे है वह लाया हुआ कीट भयके मारे भ्रामरकीटका विचार करे है, विचार करते, २ तद्रूप हो जाय है ऐसी लोकमें प्रसिद्धि है, इसी प्रकार पुरुष ब्रह्मका विचार करता करता तद्रूप हो जाय है ॥१४०॥

प्रपंचमें ब्रह्मरूपकी भावना ।

अदृश्यं भावरूपं च सर्वमेव चिदात्मकम् ।
सावधानतया नित्यं स्वात्मानं भावयेद्बुधः ॥१४१॥

यदि पूर्वश्लोकोक्तदृष्टांते भावनाबलादेवान्यस्यान्यत्वं भवेत् तर्हि ब्रह्मविवर्त्तत्वेन ब्रह्मरूपस्य विश्वस्य ब्रह्मभावनया तद्रूपता भवेदिति किमु वक्तव्यमित्याशयेन सर्वात्मभावनामाह--अदृश्य-मिति । अदृश्यं परोक्षं भावरूपं प्रत्यक्षं च सर्वं विश्वम् । यद्वा अदृश्यं द्रष्टृरूपम्, भावरूपं दृश्यम् । चकाराद्दर्शनम् । एतत्सर्वं त्रिपुट्यात्मकं जगद्भ्रांत्याऽऽत्मभिन्नत्वेन भासमानमपि चिदा-त्मकं निर्विशेषस्फुरणमात्रस्वरूपं स्वात्मानमेव बुधः अद्वैतज्ञान-निष्ठः सावधानतया स्थिरवृत्त्या नित्यं भावयेत्, सकलमिदमहं च ब्रह्मैवेति सर्वदा पश्येदित्यर्थः ॥ १४१ ॥

ज्ञानी पुरुष सदा ही सावधान होकर अदृश्य दृश्य सम्पूर्ण संसारको चिन्मय ब्रह्म चिन्तना करे ॥ १४१ ॥

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिंतयेत् ।
विद्वान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ १४२ ॥

एतदेव विवृणोति—दृश्यमिति । दृश्यं घटादिकमदृश्यतामधिष्ठानचिद्रूपतां नीत्वा । हीति विद्वत्प्रसिद्धौ । ब्रह्माकारेण कल्पितस्य परिच्छिन्नस्य नामरूपादेर्निवृत्तिपूर्वकं बृहदाकारेण परिच्छिन्नरूपेण चिंतयेदित्यर्थः। ततः किमत आह—विद्वानिति। चिद्रसपूर्णया चिदेव रसश्चिद्रस श्चिदानंदस्तेन पूर्णया धिया नित्यसुखे अविनाशिसुखे विद्वांस्तिष्ठेदिति ॥ १४२ ॥

दृश्य वस्तुको अदृश्यकी तरह करके ज्ञानी पुरुष ब्रह्मस्वरूप चिन्तना करे, तिस चिन्मय ज्ञानके होनेसे विद्वान् पुरुष चिन्मय रससे भरी हुई बुद्धिसे नित्य सुखसे आस्थान करै ॥ १४२ ॥

### राजयोगका उपसंहार ।

एभिरंगैः समायुक्तो राजयोग उदाहृतः ।
किंचित्पक्वकषायाणां हठयोगेन संयुतः ॥ १४३ ॥

इदानीमुक्तं स्वाभिमतयोगमुपसंहरति—एभिरिति । किंचित्स्वल्पं पक्वाः दग्धाः कषाया रागादयो येषां तेषां हठयोगेन पातंजलोक्तेन प्रसिद्धनाष्टांगयोगेन संयुतोऽयं वेदांतोक्तो योग इति । शेषं स्पष्टम् ॥ १४३ ॥

इन अङ्गोंसे युक्त योगको राजयोग कहे हैं, जिनका विषयोंमें राग नहीं रहे है तिस पक्षमें हठयोगयुक्त योग ही राजयोग कहावे है ॥१४३॥

### राजयोगके अधिकारी ।

परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः ।
गुरुदैवतभक्तानां सर्वेषां सुलभो जवात् ॥ १४४ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवता विरचिताऽपरोक्षानुभूतिः समाप्ता ।

अयं राजयोग एव केषां योग्य इत्याकांक्षायां सर्वग्रंथार्थमुपसंहरन्नाह—परिपक्वमिति । येषां मनः परिपक्वम्, रागादिमलरहितमिति यावत् । तेषामित्यध्याहारः । तेषां जितारिषड्वर्गाणां पुरुषधुरंधराणां केवलः पातंजलाभिमतयोगनिरपेक्षः अयं वेदांताभिहितो योगः सिद्धिदः प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदः । चकारोऽवधारणे । नान्येषामपरिपक्वमनसामित्यर्थः । ननु परिपक्वमनस्त्वमतिदुर्लभमित्याकांक्षायामस्यापि साधनत्वादतोऽप्यंतरंगसाधनमाह—गुरुदैवतभक्तानामिति । जवादतिशीघ्रमित्यर्थः । सर्वेषामिति वर्णाश्रमादिनिरपेक्षं मनुष्यमात्रं ग्रहीतव्यम्, अतएव गुरुदैवतभक्तेरंतरंगत्वम् । तथाच श्रुतिः—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः" इति । स्मृतयश्च—"तद्विद्धि प्रणिपातेन । श्रद्धावाँल्लभते ज्ञानम् " इत्याद्याः । अयं भावः—परिपक्वमनसामपि दुःसाध्यानि साधनानि गुरुदैवतभक्तानां सुसाध्यानि भवंतीति हेतोर्गुरुदैवतभजनमेव स्वधर्माविरोधेन सर्वैः कार्यमिति परमं मंगलम् ॥ १४४॥

पूर्णेयमापरोक्ष्येण नित्यात्मज्ञानकाशिका । अपरोक्षानुभूत्याख्यग्रंथराजप्रदीपिका ॥ १॥ नमस्तस्मै भगवते शंकराचार्यरूपिणे । येन वेदांतविद्येयमुद्धृता वेदसागरात् ॥ २ ॥ यद्ययं शंकरः साक्षाद्वेदांतांभोजभास्करः ॥ नोदेष्यत्तर्हि काशेत कथं व्यासादिसूत्रितम् ॥ ३ ॥ अत्र यत्संमतं किंचित्तद्गुरोरेव मे नहि ॥ असंमतं तु यत्किंचित्तन्ममैव गुरोर्नहि ॥ ४ ॥

